


# संस्कृत भारती

अक्षरम्, ८ उपमार्गः, २ घट्टः गिरिनगरम्, बेङ्गलूरु - ५६० ०८५.

# पत्रालयद्वारा संस्कृतम्

संस्कृतम् संस्कृतम् संस्कृतम् संस्कृतम् संस्कृतम्

## PARICHAYA -5

## PRAVESHA -5

Bk. Demion 2000

## WHY PROPAGATION OF SAMSKRIT AND HOW ?

**Samskrit programmes in Radio and Televison**

There are a number of programmes in Samskrit on Radio and Television such as the weekly Samskrit News bulletin on Doordarshan. Occasionally there are serials aired. These should be regularly heard and viewed and if we send our response and suggestions to the organisers, it would indicate that there is a greater demand for Samskrit programmes and thus encourage greater activity in this field.

**Inviting eminent personalities to grace functions**

When Samskrit drama or Poetry Recitation competitions are held, inviting well - known celebrities as chief guest to grace the inaugural function or Prize Distribution would earn the programme wider publicity. If the newspapers report such functions, it would make people note that Samskrit can be an easy, popular laungauge.

When there is any function at home, there is a tendency to play film music or western music rather loudly ! If we could instead, play Samskrit compositions softly, then our guests would also get to appreciate it.

**Sending greetings in Samskrit**

We could send well - known people greetings worded in Saṃskrit for Diwali, New Year, Holi, etc. If these are sent on open postcards, it would be even better, as others would also get to notice the message, which could arouse their curiosity about Samskrit.

*NOTE:*

**The matters given in the inner pages of the cover are only for information. Questions on these points will not be asked in the exam.**



ॐ

जयतु संस्कृतम् - जयतु मनुकुलम्

*Victory of Samskrutam - Victory of mankind*

# संस्कृतभारती

## Samskrita Bhāratī

**पत्रालयद्वारा संस्कृतम्**

**Samskrit Through Correspondence**

'Aksharam' 8th cross, Girinagar II Phase,
Bangalore-560 085. Ph.: 6721052

## परिचयः - PARICHAYA

**पञ्चमः पाठः - FIFTH LESSON**

**बहुविघ्नास्तु सदा कल्याणसिद्धयः ।**

**There will be many obstacles in the fulfilment of good deeds.**

**- Kathasaritsagara**

### १.विभक्तिपरिचयः

**पञ्चमीविभक्तिः- Ablative Case**

**(This case expresses the meaning of 'from' : Eg. वृक्षात् - from the tree)**

| | पुंल्लिङ्गः | स्त्रीलिङ्गः | नपुंसकलिङ्गः |
|---|---|---|---|
| अकारान्तः - | रामात्-रामेभ्यः, | - - | ज्ञानात्- ज्ञानेभ्यः |
| आकारान्तः - | - - | रमायाः-रमाभ्यः | - - |
| इकारान्तः - | हरेः-हरिभ्यः | मत्याः / मतेः } -मतिभ्यः | दध्नः-दधिभ्यः |
| ईकारान्तः - | - - | नद्याः-नदीभ्यः | - - |
| उकारान्तः - | गुरोः-गुरुभ्यः | धेन्वाः-धेनुभ्यः | मधुनः-मधुभ्यः |

सर्वनाम- 'अस्मत्' शब्दः- मत्-अस्मत्
,, 'युष्मत्' शब्दः- त्वत्-युष्मत्

Sentences with words in the Ablative Case -

१. हरिणः व्याघ्रात्[1] त्रस्यति ।

२. गजाः सिंहात् त्रस्यन्ति ।

३. नार्यः अहेः अत्रस्यन् ।

४. अहं चोरेभ्यः अत्रस्यम् ।

५. वृक्षात्[2] पर्णम् अपतत् ।

६. फलानि तरुभ्यः पतन्ति ।

७. निर्झरः गिरेः स्रवति ।

८. ग्रामीणः ग्रामात् आगच्छति ।

९. देवताः स्वर्गात् आगच्छन्ति ।

१०. भरतः लक्ष्मणात्[3] पूर्वः ।

११. लक्ष्मणः शत्रुघ्नात् पूर्वः ।

१२. वैशाखः चैत्रात् परः ।

१३. भीमः युधिष्ठिरात् परः ।

१४. गौरी आलस्यात् न पठति ।

१५. नार्यः आतपात् ग्लायन्ति ।

१६. तरुण्यः कौमुद्याः नन्दन्ति ।

१७. जन्तवः रवेः जीवन्ति ।

१८. आम्रफलं दाडिमात् श्रेष्ठम् ।

१९. महाभारतं रामायणात् विस्तृतम् ।

२०. कालिदासः भवभूतेः श्रेष्ठः ।

(अहेः=of the snake, तरुभ्यः=from the trees, निर्झरः=brook, स्रवति=flows, आतपात्=sun's heat, ग्लायन्ति=are tired, कौमुदी=moonlight).





**Some rules pertaining to the Ablative case-**

The Ablative case comes when the sense of 'from' is intended and when it is not the instrument of action. This is a general rule.

1. The words denoting the source of fear used with verbs expressing 'fear', are in the Ablative case. Eg. The deer is afraid of the tiger, व्याघ्रात् is in the Ablative case.

2. When an object is separated from another the word denoting the thing from which something is separated (The first substratum of the action of separation), gets the Ablative case. Eg. वृक्षात् पर्णं पतति ।

   Here वृक्ष is the first substratum of the action of separation between वृक्ष and पर्ण; hence it is in the Ablative case.

3. When the adjectives (गुणवाचकाः) such as पूर्वः (earlier) परः (later) श्रेष्ठः (superior), etc., are used, the words denoting that to which something is earlier, later or superior, get the Ablative case. Eg. Bharatha is elder to Lakshmana. To whom? To Lakshmana (लक्ष्मणात्)

**प्रश्नाः**

(अ) १. नार्यः कस्मात् त्रस्यन्ति ?

२. कस्मात् किम् अपतत् ?

३. ग्रामीणः कस्मात् आगच्छति ?

४. कः कस्मात् पूर्वः ?

५. काः कस्याः नन्दन्ति ?

६. कः कस्मात् श्रेष्ठः ?

७. किं कस्मात् विस्तृतम् ?

८. के कस्मात् जीवन्ति ?

९. का कस्मात् न पठति ?

१०. अहं केभ्यः अत्रस्यम् ?

(आ) Convert the following into the Ablative case and use them in your sentences.

१. अजगरः २. वृश्चिकः ३. सर्पः ४. नालिकेरः ५. पनसम्
६. उत्तमर्णः (donor; one who helps) ७. छुरिका ८. खड्गः

(इ) Translate into Samskrit :

1. The demons feared Anjaneya.
2. Flowers fell from the creeper.
3. We come from the school.
4. The Ganges flows* from the Himalaya.
5. Vasanta is earlier to Grishma.

## २. चाटुश्लोकः

A scholar went to the court of a King. Although he had deep erudition, he was treated by the officers like an ordinary scholar. The King too thought of him likewise. Some knew about his deep erudition. Still they remained silent. Coming out of the palace gate, the scholar addressed a donkey standing there.

रे रे रासभ वस्त्रभारवहनात् कुग्रासमश्नासि किम् ?
राजाश्वावसथं प्रयाहि, चणकाभ्यूषं सुखं भक्षय ।
सर्वान् पुच्छवतो हया इति वदन्त्यत्राधिकारे स्थिताः
राजा तैरुपदिष्टमेव मनुते सत्यं, तटस्थाः परे ॥

"O donkey! why do you eat this bad food after carrying the load of clothes? Go to the King's stable and eat the boiled gram with pleasure. (Do you fear that they will drive you away? You need not have that fear). Here the officers think all the animals

*प्रवहति





with tails as horses. The king believes only whatever they say as the truth. Others (i.e., those that know) remain aloof."

## ३. समस्या

अहं च त्वं च राजेन्द्र लोकनाथौ उभावपि ।
बहुव्रीहिरहं राजन् षष्ठीतत्पुरुषो भवान् ॥

A beggar says to the King, "O King! both of us are Lokanathas. But if I am Bahuvrihi compound, you are Shasthi Tatpurusha." Could the King understand the meaning? Give your solution to the problem.

## ४. सुभाषितम्

पद्माकरं दिनकरो विकचीकरोति
चन्द्रो विकासयति कैरवचक्रवालम् ।
नाभ्यर्थितो जलधरोऽपि जलं ददाति
सन्तः स्वयं परहिते निहिताभियोगाः ॥

**पदविभागः -**

पद्माकरम्, दिनकरः, विकचीकरोति, चन्द्रः, विकासयति, कैरवचक्रवालम्, न, अभ्यर्थितः, जलधरः, अपि, जलम्, ददाति, सन्तः, स्वयम्, परहिते, निहिताभियोगाः।

**तात्पर्यम् -**

The sun causes the lotuses to bloom. The moon on his own makes the lily to bloom. The cloud too, without being asked, gives water. Great souls are always taking the initiative to do good to others.

आरभन्तेऽल्पमेवाज्ञाः कामं व्यग्रा भवन्ति च ।
महारम्भाः कृतधियः तिष्ठन्ति च निराकुलाः ॥ ७ ॥

पदविभागः -

आरभन्ते, अल्पम्, एव, अज्ञाः, कामम्, व्यग्राः, भवन्ति, च, महारम्भाः, कृतधियः, तिष्ठन्ति, च, निराकुलाः ॥

तात्पर्यम् -

The ignorant start only petty works and become agitated. The wise start great deeds with discretion and never get agitated.

## ५. पदसङ्ग्रहः

मुद् - To delight

१. मोदते, २. मुद्यते, ३. मोदिष्यते
४. मोदितव्यम्-मोदनीयम्, ५. मुदितः-मुदिता-मुदितम्, ६. मुदितवान्-मुदितवती, ७. मोदमानः-मोदमाना, ८. मोदित्वा-प्रमुद्य, ९. मोदितुम् ।

याच् - To beg

१. याचते, २. याच्यते, ३. याचिष्यते
४. याचितव्यम्-याचनीयम्, ५. याचितः-याचिता-याचितम्,
६. याचितवान्-याचितवती, ७. याचमानः-याचमाना, ८. याचित्वा-संयाच्य, ९. याचितुम् ।

बाध् - To torment

१. बाधते, २. बाध्यते, ३. बाधिष्यते
४. बाधितव्यम्-बाधनीयम्, ५. बाधितः-बाधिता-बाधितम्,
६. बाधितवान्-बाधितवती, ७. बाधमानः-बाधमाना, ८. बाधित्वा-प्रबाध्य, ९. बाधितुम् ।





कम्प् - To shiver

१. कम्पते, २. कम्प्यते, ३. कम्पिष्यते
४. कम्पितव्यम्-कम्पनीयम्, ५. कम्पितः-कम्पिता-कम्पितम्,
६. कम्पितवान्-कम्पितवती, ७. कम्पमानः-कम्पमाना, ८. कम्पित्वा-प्रकम्प्य, ९. कम्पितुम् ।

कथ - To tell

१. कथयति, २. कथ्यते, ३. कथयिष्यति
४. कथयितव्यम्-कथनीयम्, ५. कथितः-कथिता-कथितम्,
६. कथितवान्-कथितवती, ७. कथयन्-कथयन्ती, ८. कथयित्वा-सङ्कथय्य, ९. कथयितुम् ।

## ६. काव्यकथा

### रघुमहाराजस्य त्यागः

दिलीपः वृद्धः सञ्जातः । सः भार्यया सह वनम् अगच्छत् । वानप्रस्थाश्रमं स्वीकृतवान् । रघुः सिंहासनम् आरूढवान् । ततः सः दिग्विजयं कृतवान् । सर्वान् देशान् जितवान् । दिग्विजयानन्तरं रघुः 'विश्वजिद्'यागं कृतवान् । तस्मिन् यागे सर्वस्वं दक्षिणा भवति । रघुमहाराजः सर्वस्य दानं कृतवान् । तस्य कोशः निःशेषः कृतः ।

कौत्सः तपस्विकुमारः । सः वरतन्तुमुनेः शिष्यः । सः रघुमहाराजस्य समीपं गुरवे दानार्थं धनं प्रष्टुम् आगतवान् । रघुः मृत्तिकापात्रेण अर्घ्यं दत्तवान् । तेन एव कौत्सः विषयं ज्ञातवान् । रघुः क्षेमं पृष्टवान् । आगमनकारणं च अपृच्छत् । कौत्सः अवदत्- 'गुरुदक्षिणा मया दातव्या । त्वम् इदानीं निर्धनः । याचनं न युक्तम् । कालम् अतिक्रम्य अहम् आगतवान् । अन्यं पृच्छामि' इति । रघुः- 'गुरवे कियत् धनं दातव्यम् ?' इति पृष्टवान् । कौत्सः स्वकथां कथितवान् - ''मम अध्ययनं समाप्तम् । ततः

अहं गुरुदक्षिणा का ? इति गुरुं पृष्टवान् । गुरुः उक्तवान् -'दक्षिणा मास्तु । भक्त्या एव अहं सन्तुष्टः' इति । अहम् आग्रहं कृतवान् । गुरुः कुपितः । 'चतुर्दशकोटिपरिमितं सुवर्णं दीयताम्' इति उक्तवान्। अहं दरिद्रः। कथम् आनयामि ? अतः अत्र आगतवान् । त्वं निर्धनः, अन्यत्र गच्छामि'' इति ॥

रघुराजः - 'अन्यत्र गमनं मास्तु । यदि अहं धनं न ददामि तर्हि मम अपवादः भवति । अत्र एव वासं कुरु । कथञ्चित् धनं सम्पादयामि' इति अकथयत् ।

अन्यस्मिन् दिने रघुः कुबेरात् धनं ग्रहीतुं प्रस्थितवान् । किन्तु कोषे सुवर्णवृष्टिः अभवत् । रघुः सुवर्णं कौत्साय दत्तवान् । कौत्सस्य मनोरथः पूर्णः अभवत् ।

## Raghu's generosity

Dilipa grew old. He went to the forest along with his wife. He undertook the vow of Vanaprastha. Raghu ascended the throne. Then he undertook the expansion of territory. He won all kingdoms. After expedition, Raghu performed the Vishvajit sacrifice. In that sacrifice all the wealth should be given as presents. Raghu, the great king, gave away all his wealth. His treasury became empty.

Kautsa was the son of a sage. He was the pupil of the great sage Varatantu. He came to the king for a gift to be given to his teacher. He enquired the welfare (of the king). Raghu offered 'Arghya' (water for washing) in an earthen vessel. On that alone Kautsa understood the situation. Raghu asked about the purpose of his coming (there). Kautsa said- "I have to pay fee to my guru, now you are pennyless. It is not proper to ask for a gift from you. I have come a bit late. I shall ask somebody else." Raghu asked- "How much money should be given to the teacher?" Kautsa





narrated his story - "My education ended. Then I asked my teacher - "What is the fee?" The teacher said 'I am pleased with your devotion. Fee is not necessary.' I insisted. The teacher got angry and said fourteen crores should be given. I am poor. How can I bring? (so much money). Hence I came to you. You are without money. I shall go elsewhere."

King Raghu said- "Do not go elsewhere. If I do not give money I shall get a bad name. Stay here. I shall somehow arrange the money."

The next day Raghu went in pursuit of money from Kubera. But there was the shower of gold in his treasury. Raghu offered the gold to Kautsa. Kautsa's desire was fulfilled.

१. रघुः कं यागं कृतवान् ?
२. कौत्सः कुतः आगतवान् ?
३. कौत्सस्य कथा का ?
४. रघुः अन्ते किम् उक्तवान् ?
५. रघुः धनं कथं लब्धवान् ?

### ७. अन्वयक्रमः

किन्तु वध्वां तवैतस्यामदृष्टसदृशप्रजम् ।
न मामवति सद्वीपा रत्नसूरपि मेदिनी ॥ ८ ॥

**पदविभागः -**

किन्तु, वध्वाम्, तव, एतस्याम्, अदृष्टसदृशप्रजम्, न, माम्, अवति, सद्वीपा, रत्नसूः, अपि, मेदिनी ।

**अन्वयः -**

किन्तु, तव, एतस्यां, वध्वाम्, अदृष्टसदृशप्रजम्, मां, सद्वीपा, रत्नसूः, अपि, मेदिनी, न, अवति ।

अन्वयार्थः -

किन्तु - But, तव - yours, एतस्याम् वध्वाम् - in this daughter-in-law, Sudakshina, अदृष्टसदृशप्रजं मां - me, having not seen worthy son, सद्वीपा - together with islands, रत्नसूः अपि - yielding riches too, मेदिनी - the earth, न अवति - does not please.

तात्पर्यम् -

The whole of terrestrial globe with islands is under my grip. This earth has offered me all the desired prosperity. Inspite of it, I have no contentment. The reason is this - my wife Sudakshina is like your daughter-in-law. But I have not even one worthy son from her. Of what use this wealth, oh Sage!

तस्मान्मुच्ये यथा तात ! संविधातुं तथार्हसि ।
इक्ष्वाकूणां दुरापेऽर्थे त्वदधीना हि सिद्धयः ॥ ९ ॥

पदविभागः -

तस्मात्, मुच्ये, यथा, तात, संविधातुम्, तथा, अर्हसि, इक्ष्वाकूणाम्, दुरापे, अर्थे, त्वदधीनाः, हि, सिद्धयः ।

अन्वयः -

तात ! तस्मात्, यथा, मुच्ये, तथा, संविधातुम्, अर्हसि, हि, इक्ष्वाकूणाम्, दुरापे, अर्थे, सिद्धयः, त्वदधीनाः ।

अन्वयार्थः -

तात - Venerable sir, तस्मात् - from the debt of manes, यथा - in which way, मुच्ये - I am relieved, तथा - in the same way, संविधातुम् - to do, अर्हसि - you are capable. हि - Because, इक्ष्वाकूणाम् - of the Ikshwakus, दुरापे अर्थे - in regard of things difficult to obtain, सिद्धयः - the desired accomplishments, त्वदधीनाः - are under your hold!





तात्पर्यम् -

Man is born with three debts - the debt of manes, the debt of preceptors and the debt of Gods. Man will be free of the first debt by raising good progeny, free of the second debt by study and the third by worship etc. Venerable sir, you are the wise of Ikshwaku dynasty. You are aware of the fact that many of my ancestors have found solutions to their problems from you. It rests with you to find a way for my problem. Please tell me how to be relieved of this debt of manes. I don't see any other person more important than yourself.

## ८. अनुवादपद्धतिः

In translation, the correct use of indeclinables is another important factor to be taken special note of. The intended sense is very well expressed by the indeclinables. In the present lesson the use of three indeclinables, viz., च - and, एव - only, अपि - also- is given.

**1. च - and**

This is used when words are to be conjoined.

eg. Rama and Krishna - रामः कृष्णः च ।

Sita and Savitri - सीता सावित्री च ।

Rama, Lakshmana and Sita - रामः, लक्ष्मणः सीता च ।

In English the word 'and' is used in the middle, whereas in Samskrit it is used only in the last.

2. एव - **Ascertainment, Determination**

तत्र एव अस्ति - It is there only.

In the above sentence we like to emphasise the word 'there'. Therefore we add 'only' to it. This denotes ascertainment or determination. The word एव comes after the word to be emphasised.

i) रामः एव नगरं गच्छति । - Only Rama goes to the city. (nobody else)

ii) रामः नगरम् एव गच्छति । - Rama goes to the city only. (nowhere else)

iii) रामः नगरं गच्छति एव । - Rama will only go to the city. (There is no doubt about his going)

In the above sentences it is observed that by adding एव to the subject, the object and the verb, the respective element is emphasised.

Following are some examples for एव coming after the verbs.

(He) Will come only - आगच्छति एव ।

(I) Will listen only - शृणोमि एव ।

(They) Will come only - आगच्छन्ति एव ।

(He) has come only - (सः) आगतवान् एव ।

(It) has fallen only - पतितम् एव ।

(I) Will see only - पश्यामि एव ।

(I) Will do only - करोमि एव ।

(It) Will be got only - लभ्यते एव ।

(She) has given only - दत्तवती एव ।





3. अपि - **also, too**

अपि is used in the same manner as एव but in a different sense.

Ex:- रामः अपि नगरम् आगच्छति - Rama too will come to the city, (along with somebody)

रामः नगरम् अपि आगच्छति - Rama will come to the city too, (will go elsewhere too)

रामः नगरम् आगच्छति अपि - Rama will come also to the city. (will do something else too)

**Translate to English** -

१. ब्रह्मदेवं विष्णुं शिवं च ध्यायत ।

२. कैलासे देवाः गन्धर्वाः च निवसन्ति ।

३. लेखनी गृहे एव अस्ति ।

४. अहं लेखनीम् आनेतुम् एव विस्मृतवान् ।

५. सायं वृष्टिः भविष्यति एव ।

६. मम समीपे धनं नास्ति एव ।

७. वृक्षे पर्णानि एव न सन्ति ।

८. त्वया सह अहम् अपि आगच्छामि ।

९. सः कदाचित् आगच्छति अपि ।

१०. सः सज्जनः चतुरः च ।

(लेखनी - Pen, वृष्टिः - rain, पर्णानि - leaves, कदाचित् - sometime)

**Translate into Samskrit -**

1. Call Rama, Krishna and Mohana.
2. God too and demons too waged war.
3. Rama, Lakshmana and Sita went to forest.
4. The sage lives in the forest only.
5. Only Mahesh had come home.
6. There is no time to write letter too.
7. Go only after reading this book.
8. You too come with me.
9. He earns, he spends too.
10. Officer comes to the village too.

## ९. सङ्ग्राह्यविषयाः

षट् कर्माणि - अध्ययनम्, अध्यापनम्, यजनम् (performing the sacrifice) याजनम् (Getting the sacrifice performed) दानम्, प्रतिग्रहः, (acceptance)

योग-षट्कर्माणि - धौति, बस्ति, नेति, नैलिकी, त्राटक, and कपालभाति ।

षट् दर्शनानि - सांख्यम्, योगः, न्यायः, वैशेषिकम्, पूर्वमीमांसा, उत्तरमीमांसा (वेदान्तः) ।

षड् दुर्गाणि - धन्वदुर्गं, महीदुर्गं, गिरिदुर्गं, मनुष्यदुर्गं, मृद्दुर्गं, वनदुर्गम्।

षड् रसाः - कटुः (hot), आम्लः (sour), मधुरः (sweet), लवणः (saltish), तिक्तः (pungent), कषायः (astringent) ।

षड् रिपवः - (six enemies) कामः, क्रोधः, लोभः, मोहः, मदः, मात्सर्यम् ।





**Solution to the problem:**

लोकनाथः can be analysed into a Bahuvrihi compound as लोकः नाथः यस्य सः - he whose patrons are the people. Lokanatha means a beggar.

The same compound, analysed into Shasthi Tatpurusha, would be लोकस्य नाथः - the Lord of the people. लोकनाथः means the king.



ॐ

# संस्कृतभारती

## पत्रालयद्वारा संस्कृतम्

## परिचयः
## पञ्चमः पाठः

### प्रश्नाः

1. Write अन्वयार्थ of the following verse:

वासांसि जीर्णानि यथा विहाय
नवानि गृह्णाति नरोऽपराणि ।
तथा शरीराणि विहाय जीर्णानि
अन्यानि संयाति नवानि देही ॥

(वासांसि - clothes, विहाय - having discarded, संयाति - will obtain, देही - the soul) (Just as a man discards old clothes and takes new clothes, so does Atma discard the old body for a new body.)

2. गच्छति - Write all Krudanta forms of this verb.

3. Write 5 sentences using words in nominative, accusative, instrumental, dative and ablative cases in each.

Eg.: वृक्षात् पतितं फलं रामः शस्त्रेण खण्डयित्वा सीतायै ददाति ।

प(इं) - V, मे -९८, १०००



# Treasure of Knowledge in Ancient India

*(Continued from previous lesson)*

A fourth part (quarter) of a day or night is called a Yama. There are 8 Yamas in 24 hours.

A vessel that can hold a volume of 1 'prastha' of water is made with copper weighing 6 'pala'. A rod (needle) of gold weighing 4 'masa', and four fingers long is used to make a hole in the vessel and the empty vessel is placed on water. As water trickles in and fills the vessel, it will sink. The time required for the vessel to fill is called one 'nadika'.

Fifteen days constitute a 'paksha', which is of two types, Krishnapaksha and Shuklapaksha, based on the dark and bright fortnights of the moon. Together, Two pakshas make a month, masa. Two months make a Ritu and six months make an Ayana. There are two Ayanas, Dakshinayana and Uttarayana, when the sun is in the southern and northern sky respectively. The two Ayanas together form one day and night of the devatas, i.e., one year of mankind.

A hundred such years is called the lifespan, Parama ayu, of man. The sun, who ordains the paths of the moon, planets and stars is the Deity who marks Time. From a tiny 'paramanu' of time to the duration of an entire year, the sun is on an eternal path, revolving around the entire celestial sphere marked by the 12 zodiac constellations. The same duration is known by different names such as Samvatsara, Parivatsara, Idavatsara, Anuvatsara etc. based on the month it is marked by, associated with sun, moon as planets.

Pari-5

The concept of time and its measurement, given in ancient Indian Astronomy as Jyoutisha, is scientific and correct even according to modern methods.

